**शारीरं चाभिनयं व्याख्यास्याम्यनुपूर्वशः ॥४२॥**

**षडात्मकस्तु शारीरो वाक्यं सूचाङ्कुरस्तथा ।**

**शाखा नाट्यायितं चैव निवृत्त्यङ्कुर एव च ॥४३॥**

### अभिनवभारती

शारीरं सामान्याभिनयं वक्ष्यते। सत्त्वानन्तरं हि विपरीतवृत्त्या आङ्गिकं आङ्गिकस्यानन्तरं वाचिकं वागङ्गसत्त्व इति। शारीरमित्यादि अत्र चशब्दो यस्मादर्थे, अपिशब्दस्तत इत्यत्रार्थे ॥४२॥

तत्रोद्देशमाह—षडात्मकस्त्विति। यः पूर्वं शारीरोऽभिनयो बहुना प्रकारवैचित्र्येणोक्तः तस्यावान्तरसामान्याभिनयरूपा हि षड् भवन्तीति, स एव षडात्मकतयाऽवान्तरजातियोगात् सात्त्विकवाचिकाभिनयैश्च संभूय क्रमतां प्राप्तैश्च व्यामिश्रतायां सामान्याभिनयः संपाद्यते इति तुशब्दस्यार्थः। वाक्यमिति वाक्यसहचरितः शारीरोऽभिनयो वाक्यम्। न हि शारीराभिनयमध्ये च निर्वर्तकानि गणितानीति चिरन्तनाः ॥४३॥

### बालक्रीड़ा

(मूल) हे द्विजोत्तमो ! मैंने पहले सत्त्व जन्य सात्त्विक अभिनय को कहा है। अब मैं अनुक्रम से शारीर अभिनय को कहूंगा ॥४२॥

(मूल) यह शारीर अभिनय षडात्मक है ६ प्रकार का है । वाक्य १ सूचा २ अङ्कुर ३ शाखा ४ नाट्यायित ५ निवृत्यङ्कुर ६ ॥४३॥

शारीर सामान्याभिनय को कहेंगे कि वागङ्गसत्त्व में विपरीतवृत्ति से पहले सात्त्विक है सात्त्विक के अनन्तर आङ्गिक हैं और आङ्गिक के अनन्तर वाचिक है। शारीरं च अपि इसमें उपात्त च शब्द यस्मात् के अर्थ में है और अपि शब्द तत इस अर्थ में हैं ॥४२॥

उस उद्देश को कहते हैं षडात्मकस्तु। शारीर अभिनय ६ प्रकार का है। पहले जिस शारीर अभिनय को बहुत विचित्र प्रकारों से कहा है उसके अवान्तर सामान्याभिनय रूप छः होते हैं इस तरह अवान्तर प्रकारों के योग से वही षडात्मक हुआ। एकत्रित हो गया फिर क्रम प्राप्त सात्त्विक आंगिक एवं वाचिक अभिनयों की व्यामिश्रता होने पर सामान्याभिनय होता है। ऐसा तु शब्द के अर्थ से प्राप्त होता है। वाक्यम्। अर्थात् वाक्यसहचरित शारीर अभिनय वाक्य है यह नही है कि शारीर अभिनयों के मध्य में निर्वर्त्तकों की निवृत्यंकुरों में गणना की है ऐसा चिरन्तन कहते हैं ॥४३॥

## नानारसार्थ युक्तैर्वृत्तनिबन्धैः कृतः सचूर्णपदैः।

### अभिनवभारती

शारीरस्वरा (अ० २८) इति यद्व्यवहाराद्वा भावश्च शारीरत्वेन प्रसिद्धो, वाक्यमेवाभिनयान्तरनिरपेक्षमिति, सद्वृत्तभाषागुणः स्फुटतमां स्वार्थप्रतीतिं यदा विधत्ते तत एव रसभावानुभावकः, तदा स एव वाक्याभिनय इति तु काव्यकौतुक-ग्रन्थः। अत्र तु पाठ्यरूपः सामान्याभिनयः कथमिति चिन्त्यम्। शारीरानुप्रवेशा-दिति चेत् अभिनयान्तरनिरपेक्ष एव। न चाभिनयशून्याभिनेयकाव्ये वाक्यं किंचि-द्भवति। न चाभिनेये वाक्याभिनयव्यवहार इत्युपाध्यायेनायमेकीयोऽभिप्रायो दर्शितः न त्वस्यायं स्वपक्ष इति भ्रमितव्यम्।

तत्र वाक्याभिनयस्य लक्षणमाह –

नानारसार्थयुक्तैर्वृत्तनिबन्धैः कृतः स चूर्णपदैः।
प्राकृतसंस्कृतपाठो वाक्याभिनयो बुधैर्ज्ञेयः ॥इति॥

नानारसविशेषो वाक्यार्थः। तेन युक्तानि वाक्यानि यानि तानि च वृत्तरचितानि चूर्णपदात्मकानि वा पुनरपि संस्कृतानि वा प्राकृतानि वा तैर्युक्तः सहचरितः शारीरो

### बालक्रीड़ा

अथवा शारीरस्वरा इस व्यवहार से जो शारीरतया प्रसिद्ध भाव है और अभि-नयान्तर निरपेक्ष वाक्य है। किन्तु काव्यकौतुक ग्रन्थ में तो कहा है कि सद्वृत्तों से सम्पन्न भाषा का जो गुण है वह जब अत्यन्त स्फुट रूप से अपने अर्थ की प्रतीति को करता है इसी लिए वह रस और भावों का अनुभावक है प्रत्यायक है तब वही वाक्या-भिनय है। इस विषय में चिन्तनीय है कि सामान्याभिनय पाठ्य रूप कैसे होगा। अगर कहें कि यहां शारीर का अनुप्रवेश है तो यह भी ठीक नही है क्योंकि पहले कह आये हैं अभिनयान्तर निरपेक्ष वाक्य है। और भी बात है कि अभिनय शून्य अभिनेय विशिष्ट काव्य में अभिनय निरपेक्ष वाक्य कुछ होता है अर्थात् कुछ नही होता है। अभिनेय पदार्थ है उसमें वाक्याभिनय का व्यवहार नही होता है ऐसा उपाध्याय जी ने एक किसी का अभिप्राय दिखाया है किन्तु यह उनका अपना पक्ष है ऐसा भ्रम नही करना चाहिए। यहां वाक्याभिनय का लक्षण स्वरूप कहते हैं नान्त।

नानारसविशेष वाला वाक्यार्थ है। अतः उससे युक्त जो वाक्य हैं वे वाक्य छन्दो-बद्ध है वृत्तों से रचित हैं अथवा बिखरे हुए पद स्वरूप है उसके बाद फिर वे संस्कृत भाषा मय हैं या प्राकृत भाषामय है। उन वाक्यों से युक्त सहचरित शारीर है इसका

**प्राकृतसंस्कृतपाठो वाक्याभिनयो बुधैर्ज्ञेयः ॥४४॥**

## अभिनवभारती

वाक्येन सहैव प्रयुज्यमानः शारीरो वाक्याभिनय इति यावत्। प्राकृतः संस्कृतश्च पाठोऽस्मिन्निति बहुव्रीहिः। स चाय वाक्याभिनयश्चतुर्धा संस्कृतप्राकृतयोर्गद्य-पद्यभेदात्।

अत्र केचिदाहुः योऽर्थः सदैव हृदये वर्तते अत एव विमर्शानुवन्ध-नादिनिरपेक्ष एव स सततं स्फुरति। यथा भीमसेनस्य कुरुकुलविषयः क्रोधातिशयः तद्विषये वाक्ये "चञ्चद्भुजभ्रमित" वेणी—(अ० १) इत्यादौ पाठसमकालं यो भ्रुकु-ट्यादिमयः शारीरोऽभिनय इति। एतच्चासत्। सूचायां विमर्शपूर्वकवस्तु-विषयायामपि प्रवृत्तायां यद्वाक्यं बध्यते तत्सहचरितोऽपि शारीरः किमिति न वाक्याभिनयः तथापि चतुर्विधवाक्याभिनययोगात् सूचादीनां बहुभेदत्वं वक्ष्याम इत्यास्तां तावत् ॥४४॥

## बालक्रीड़ा

(मूल) सचूर्ण पद माने जिस रचना में ऐसे पदों की योजना की गई हो जो सर्व विज्ञात हो अधिक रूप में प्रयुक्त हो। चूर्णन पेषण जिनका हो गया हो। नाना रस से ओत-प्रोत अर्थो से युक्त छन्दों की रचना जिसमें की गई हो तथा जिसमें प्राकृत एवं संस्कृत पाठ हो वह वाक्यार्थाभिनय है ॥४४॥

मतलव हुआ कि वाक्य के साथ प्रयुज्यमान शारीर ही वाक्याभिनय है। प्राकृत एवं संस्कृत पाठ जिसमें है ऐसा यहां बहुव्रीहि समास है। यह वाक्य चतुर्विध है। संस्कृत भाषा में निबद्ध गद्य और पद्य के भेद से तथा प्राकृत भाषा में निबद्ध गद्य और पद्य के भेद से चार प्रकार का है।

यहां कोई कहते हैं कि जो अर्थ हृदय में है इसीलिए विमर्श की अपेक्षा विना किये ही वह निरन्तर स्फुरित होता है। जैसे भीमसेन के हृदय में कुरुकुल के विषय में क्रोधातिशय है। उस विषय का वाक्य है चञ्चद्भुजभ्रमित इत्यादि .वेणीसंहार नाटक का श्लोक वाक्य। इसे पढने के समय में ही भ्रुकुटी संश्चालन या तिरछापन शारीरा-भिनय होने लगता है। इस पर कहते हैं कि यह सब असत् है। क्योंकि वस्तु के विषय में विमर्श पूर्वक प्रवृत्त होने वाली सूचा में जो वाक्य का निबन्धन है और तत्सहचरित ही शारीर अभिनय है तव वह अभिनय वाक्याभिनय क्यों नही कहलायेगा। तव भी चार प्रकार के वाक्याभिनय के भेद से सूचा के बहुत भेदों को हम आगे कहेंगे ॥४४॥

**वाक्यार्थो वाक्यं वा, सत्त्वाङ्गैः सूच्यते यदा पूर्वम् ।**
**पश्चाद्वाक्याभिनयः सूचेत्यभिसंज्ञिता सा तु ॥४५॥**

### अभिनवभारती

वाक्यार्थो वाक्यं वा सत्वाङ्गैः सूच्यते यदा पूर्वम् ।
पश्चाद्वाक्याभिनयः सूचेत्यभिसंज्ञिता सा तु ॥इति॥

यदा तु निपातः यदित्यत्रार्थे इह वर्तते । तेन यैः सात्त्विकाङ्गिकैः भावि-वक्तव्यं सूच्यते, येषामन्तरोऽभिनयः प्रवर्तत एव सूचाभिनयः । "आत्माबुद्धया समेव्यार्था" निति हि न्यायो वा प्रसरेत् । तत्रोत्तमानां बाहुल्येनाभिसंधानविचार-पूर्वकं एवमिति चिरतरोऽसावभिसन्धिकालः तत्राविष्टस्यैवेहोपयोग इति—विचार्यमाणे तथाभूतवस्तुविशेषावेशजनितेन शरीरविकारेणावश्यं भवितव्यं सममेव सूचाभिनयः । तत्र च द्वयी गतिर्विद्यते, स्थितेनैवाभिसन्धानेन यादृक्क्रम आक्षिप्त-स्तादृशैव क्रमेण परतः शब्दोच्चारणम् । यथा राज्यं निर्जिशत्रु योग्यसचिवन्यस्तः समस्तो भरः' (रत्ना —अ-४) इत्यादौ । तत्र हि पूर्वपूर्वान्तिरवाक्यांशाभिधेयभाग-प्रभावित एवोत्तरोत्तरावान्तरवाक्यार्थं इति यादृगभिसन्धानक्रमस्तादृगेव तत्र क्रमः ।

### बालक्रीड़ा

(मूल) जब पहले से ही अंगों के संचालन के सत्त्व से श्रेष्ठता से वाक्यार्थ या वाक्य की, माने वक्तव्य की सूचना दे दी जाय फिर पीछे अभिनय किया जाय वह सूचासंज्ञक अभिनय है ॥४५॥

यहां यदा और तु निपात यत् इस अर्थ में है । अतः जिन सात्त्विक एवं आङ्गिकों से भावी वक्तव्य सूचित होता है जिनके अन्तर में अभिनय प्रवृत्त होता है वही सूचाभिनय है । अथवा यदा पाणिनीय शिक्षा में बतलाया हुआ आत्मा बुद्धि से अर्थों को संगृहीत करके यह न्याय प्रसक्त होता है । उसमें उत्तम पुरुषों का अधिकतर पूर्वापर के अभिसंधान के साथ विचार पुरःसर ऐसा कार्य होता है । यह प्राचीन अभिसन्धि काल है । उसमें आविष्ट का यहां उपयोग है । ऐसा जब विचार करते है तब उस तरह के वस्तु विशेष के आवेश से शरीर के विकार अवश्य होने चाहिए । अतः उनके साथ ही सूचाभिनय होता है । वहां दो जातियां हैं पूर्वोपस्थित अभिसन्धान से जैसा आक्षिप्त हो गया है उसी क्रम से परतः आगे शब्द का उच्चारण है । जैसे—निर्जितशत्रु राज्य है और उसका समस्त भार योग्य सचिव पर रख दिया है । इत्यादि में । यहां पूर्व पूर्व अवान्तर वाक्यांश के अभिधेय प्रतिपाद्य भाग से प्रभावित ही उत्तरोतर वाक्यार्थ है इस अभिसन्धान का जैसा क्रम है वही क्रम यहां है । यह एक गति है । जहां तो अभिसन्धान अन्य है और क्रम अन्य प्रकार का है वहां अभिधेय

## अभि नवभारती

यत्र त्वन्यथाभिसन्धानमन्यथा च क्रमस्तत्र निर्विभागभेदकं सन्धानीयवाक्यार्थ-संधानम् । यथा मायापुष्पके सुग्रीवस्य—

दुर्गं भूमिरमात्यभृत्यसुहृदो दाराः शरीरं धनं
मानी वैरिविमर्दसौख्यममरप्रख्येन सख्येन किम् ।
यस्मात्सर्वमिदं प्रियाविरहितं तस्मादशक्ता वयं
न स्वेच्छासुलभैः पथोऽपि घटने शैलाश्मखण्डैरपि ॥

अत्र हि शरीरं दारा भूमिर्धनं भृत्या सुहृत् अमात्यो दुर्गं वैरिविमर्दसुखं रामस्य मित्रत्वमितिप्रसिद्धिरित्यभिसन्धानक्रम उचितो, निकटार्थपरामर्शक्रमेण प्रकरणावशादिदं लब्धं दूरं प्रसृत्य क्रमेण यद्वा इदं तावदास्तां, इदमपि तत इति न्यायेनान्तः प्रवेशः, तथापि रामस्य मित्रत्वमितिप्रसिद्धिरित्यादिना विलोमक्रमेण भाव्यम् । तत्र प्रथमे पक्षे वाक्यं सूच्यत इत्युक्तम्, क्रमो हि वाक्यमिति तद्विदो मन्यन्ते । 'एको नववच···शब्दः क्रमो युध्यतः सुहृद्भि' (?) रित्यादौ । द्वितीयपक्षे तूक्तं वाक्यार्थः सूच्यत इति ।

## बालक्रीड़ा

प्रतिपाद्य माग से प्रभावित भेद नहीं हैं वहां अभिसन्धानीय वाक्यार्थ का सन्धान होता है । जैसे मायापुष्पक में सुग्रीव का वाक्य है ।

दुर्ग भूमि अमात्यभृत्य मित्र द्वारा शरीर धन मान वैरी के विमर्द से जनित सुख एवं अमरप्रख्य सख्य से क्या है अर्थात् कुछ भी नहीं है । क्योंकि यह सब सीता जो भगवान् राम की प्रिया है उससे रहित है अतः स्वेच्छा से सुलभ इन पर्वत के पाषाण खण्डों से मार्ग की रचना में भी हम लोग अशक्त हैं ।

यहां शरीर द्वारा भूमि धन भृत्य अमात्य सुहृत दुर्ग वैरिविमर्द सुख एवं राम का मित्रत्व ऐसी प्रसिद्धि है अतः यह क्रम उचित है क्योंकि निकटवर्त्ती अर्थो के परामर्श क्रम के द्वारा प्रकरण के जरिये मिलता है मिला है अथवा दूर जाकर फिर क्रम के द्वारा मिलता है इसे रहने दिया जाय । यह भी तो उसी वाक्य से मिलता है इस न्याय से अन्तः प्रवेश माने पदार्थो को बनाया जा सकता है तब भी राम का मित्रत्व इसकी प्रसिद्धि है इस विलोम क्रम से होना चाहिए वहां प्रथम पक्ष में वाक्य सूच्य होता है ऐसा कहा । क्रम वाक्य है—ऐसा क्रमवित् एवं वाक्यवित् जानते हैं । एक इत्यादि में है । द्वितीय पक्ष में तो कह दिया है कि वाक्यार्थ सूचित किया जाता है ।

'हृदयस्थो निर्वचनैरङ्गाभिनयः कृतो निपुणसाध्यः ।

## अभिनवभारती

अन्यस्त्वाह—यदा स्वयमेव विमृश्यते तदा वाक्यार्थः सूच्यते इत्युचितः, यदा परवचनमाकर्ण्यते, यथा 'भो वयस्स पेक्ख पेक्ख' (रत्ना) इत्यादावुद्यानवर्णनं पूर्यते तदा तदुक्तोऽर्थः सूच्यते तस्य पश्चाद्वचनाभिनयो भविष्यति 'वयस्य सम्यगुपलक्षित' मित्यादि तत्र सूचाभिनये वाक्यं सूच्यत इति। तच्चासत्—परवाक्यापेक्षया हि तत्र निवृत्त्यङ्कुराभिनयः भाविवाक्यापेक्षया तु ततोऽन्यैव सूचा। अनभिनेय एवाभिनयनलक्ष्यं प्रत्यपरिचयोऽयमपराध्यति। किंचिद्वाक्यार्थप्रग्रहणेन किमयमर्थो न स्वीकर्तुं शक्यो येन पुनर्वाक्यशब्दोपादानं स्यात्, तस्मात्परोदीरितवाक्यार्थ एव ह्यसौ सूचितो न तु वाक्यमित्यास्ताम् ।।४५।।

तदिदमुक्तपूर्वं संस्कृतप्राकृतयोर्गद्यपद्यभेदाचचतुःप्रकारं वाक्यं तदर्थसूचने भेदादष्टधासूचाभिनयादनुगतं षोडशधा युक्तम् । परवाक्यस्य न भिन्नाङ्गते-त्यधुनैवोपपादितम् ।

हृदयस्थो निर्वचनैरङ्गाभिनयः कृतो निपुणसाध्यः ।

## बालक्रीड़ा

दूसरे लोग कहते हैं कि जब अपने स्वयं परामर्श करते हैं तब वाक्यार्थः सूच्यते यह उचित है। जब तो दूसरे के वचन को सुनते हैं जैसे—भो वयस्य ! देखो देखो इत्यादि उद्यान वर्णन की पूर्ति की जाती है तब वहां वाक्यार्थ सूचित होता है। उसके बाद वचनाभिनय होगा। जैसे वयस्य आपने सम्यक् समझा इत्यादि। वहां सूचाभिनय में वाक्य सूचित होता है। यह सब असत् है। परवाक्य की अपेक्षा से वहां निवृत्त्य-ङ्कुर का अभिनय होता है और भावी वाक्य के अपेक्षा से उससे भिन्न सूचा होती है। यह अनभिनेय है इसमें आपका अपराध नही है किन्तु अभिनयन के लक्ष्य के विषय में जो अपरिचय है वह अपराधी है। यहां 'वाक्यार्थो वाक्यं वा' इस रूप में जो कथन है वहां वाक्यार्थ के जान लेने से क्या इस अर्थ का जान लेना संभव नही है जो पुनः वाक्य शब्द का उपादान किया। इस लिए परोदीरित वाक्य का अर्थ ही यहां उचित है न कि वाक्य। अतः रहने दिया जाय ।।४५।।

यह जो पहिले कहा था कि वाक्यार्थाभिनय संस्कृत एवं प्राकृत में गद्य एवं पद्य के भेद से चार प्रकार का है वह अर्थ सूचन में भी उतने ही प्रकार का होने से आठ प्रकार का है और सूचाभिनय से अनुगत कर देने से अर्थात् मिला देने से १६ प्रकार

'सूचैवौत्पत्तिकृतो विज्ञेयस्त्वङ्कुराभिनयः ।।४६।।

अभिनवभारती

सूचैवोत्पत्तिकृतो विज्ञेयस्त्वङ्कुराभिनयः ।। इति

अन्यपरेऽपि वाक्ये यद्गर्भीभूतं हृदयस्थं वस्तु तन्निष्ठो योऽभिनयोऽङ्गविकारैर्वचनशून्यैः सम्पादितः सूचातुल्यः सोऽङ्कुरो नाम शारीरः । यथा सागरिका—जाव अहं पि कुसुमाइं अवचाइअ कामदेवं पूअइस्सं—इत्यभिधायैतद्वाक्ये गर्भीभूतं कुसुमापचयमङ्गविकारैर्दर्शयति । यच्चायमङ्कुरो निपुणैरेव प्रयोक्तृभिः सामाजिकैश्च साध्यः आपाद्यः चेतसा ध्यात उद्भावितया स्वबुद्धिकल्पनयोपचितः । यद्यपि कविवाक्यान्येवात्रोपजीव्यानि, तथापि यादृक् कुसुमाचयकर्म सागरिकायाः सौभाग्यसौन्दर्यप्रेमसाध्वसादिगर्भं न तादृशं तापसस्य तदुभयविलक्षणं 'यः वेद्या ?' इत्येवमादि तत्सर्वं बचनेभ्य एवाकृष्यते तथा विस्पष्टं च न तथावचनतो लभ्यमेतत् । अपि तु पर्यालोचनातिशयम्यमिति निपुणसाध्यमित्युक्तम् ।।४६।।

बालक्रीड़ा

(मूल) जब निपुण अभिनेताओं के द्वारा हृदयस्थ किसी नाटकीय अङ्ग के अभिनय का निर्वचन कर दिया जाय। तब इस प्रकार निर्वचन कर देने के कारण सूचा अभिनय ही निवृत्यङ्कुर अभिनय कहलाता है ।।४६।।

का होना युक्त है। अन्य परक अन्यार्थक वाक्य में जो गर्भीभूत हृदयस्थ वस्तु है तद्विषयक जो वाचिक अभिनय से रहित अंगविकारों से सम्पन्न किया सूचातुल्य अभिनय है वह अङ्कुर नामक शारीर है।

जैसे सागरिका—मैं भी कुसुमों का अवचयन कर कामदेव की पूजा करूंगी—ऐसा कहकर इस वाक्य में गर्भीभूत कुसुमावचयना को अङ्गविकारों से दिखाती है। यह जो अंकुर अभिनय है वह निपुण प्रयोक्ता एवं सामाजिकों का साध्य है आपाद्य है चित्त से ध्यात है और अपनी बुद्धि के द्वारा उद्भावित कल्पना से उपचित किया गया है। यद्यपि यहां कवियों के वाक्य ही उपजीव्य हैं तद्यपि जैसा कुसुमावचय कर्म सागरिका के सौभाग्य सौन्दर्य प्रेम एवं साध्वसादि से गर्भीकृत है वैसा तापस का नही है। जो सहृदय वेद्य है वह तो तदुभय विलक्षण है—इस प्रकार के इत्यादि सब कुछ वचनों से ही आकृष्ट किया जाता है अतः स्पष्ट यह उस प्रकार के वचन से लभ्य नही है। अपितु पर्यालोचन लभ्य है इस लिए कहा कि निपुण से साध्य है। और लोग तो कहते हैं कि यह सूचा के उत्पत्ति भाग के तुल्य ही अङ्कुर है क्योंकि उसके पहले यह वचगशून्य है। अतः नही कहने के समान है इसका अर्थ निर्वचन शब्द से कहा गया है ।।४६।।

**यत्तु शिरोमुखजङ्घोरुपाणिपादैर्यथाक्रमं क्रियते ।**
**शाखादर्शन मार्गः शाखाभिनयः स विज्ञेयः ।।४७।।**

### अभिनवभारती

अन्ये तु सूचाया उत्पत्तिभागेन तुल्योऽङ्कुरस्तस्याः प्रागभावे वचनशून्यत्वादिति । इदं त्वनुक्तसमानं निर्वचनशब्देनोक्तत्वादर्थस्य ।

यत्तु शिरोमुखजङ्घोरुपाणिपादैर्यथाक्रमं क्रियते ।
शाखादर्शनमार्गः शाखाभिनयः स विज्ञेयः ।।

समस्तेन शाखाव्यापारेण वर्तनाप्रधानतया प्रयुक्तः शाखाभिनयः 'शिरोमुखजङ्घोरु'—इत्यादिना कृतैकवद्भावेन द्वन्द्वपदसमूहेन पुनः श्लोकद्वन्द्वेन, नाटचायितमित्यादि स्थान इत्यादि च ।।४७।।

पूर्वप्रविष्टस्य पात्रस्य स्वस्तरूपमुदीक्षमाणस्य अपरपात्रस्य प्रवेशः तद्ध्रुवागानतत्सूचापरिक्रमणादि किंचिन्नाटचमस्तीति तत्काले पूर्वपात्रेण ये समुचिता उपचाराः क्रियन्ते नाटचायितमित्याद्यार्यायास्तात्पर्यम् । पूर्वप्रविष्टेन पात्रेण सह सङ्गमं विधाय पश्चात्प्रविष्टपात्रपरिक्रमणादिकाले स्थानकेनैवासीनस्य तूष्णीं स्थितौ प्राप्तायामभिनयः तदपि नाटचायितमिपरायास्तात्वर्यमिति श्रोशङ्कुकाद्याः, तच्चायुक्तम् । अन्योन्यसङ्गमावधि यत्पात्रस्य चेष्टितं तदपरोदितवाक्यार्थसूचनो-

### बालक्रीड़ा

(मूल) जहां क्रमशः शिर मुख वक्षः स्थल उदर कर हस्थ जंघा उरु एवं पैरों से शाखा के देखने का मार्ग माने उपाय कर दिया गया हो उसे शाखाभिनय समझना चाहिए ।।४७।।

यत्तु । शिरोमुखजङ्घोरु इत्यादि पद समूह में किये गये एकद्भावरूप समाहार द्वन्द्व के द्वारा पुनः नाटचायितमित्यादि और स्थान इत्यादि दो श्लोकों के द्वारा समस्त शाखा व्यापार से वर्त्तना को प्रधान मान कर शाखाभिनय का प्रयोग किया जाता है। पूर्व प्रविष्ट पात्र के स्वरूप को उत्कृष्टता से देखते हुए अपर पात्र के प्रवेश के समय में सादृश ध्रुवा का गान एवं तादृश सूचा परिक्रमादि कुछ नाटच होता है अतः उस समय में पूर्व प्रविष्ट पात्र जो उपचार करता है। ऐसा नाटचायित इस आर्या का तात्पर्य है। पूर्वप्रविष्ट पात्र के साथ संगम करके स्थानक विधि से बैठे हुए पश्चात्प्रविष्ट पात्र का जो पूर्व प्रविष्ट पात्र के परिक्रमण के समय में प्राप्त तूष्णी स्थिति रूप में अभिनय है वह भी नाटचायित है ऐसा अपर आर्या का तात्पर्य है इसको श्रीशंकुकादि कहते हैं। किन्तु वह अयुक्त है। परस्पर के संगम पर्यन्त जो पात्र का व्यापार है वह दूसरे पात्र

## अभिनवभारती

चितत्वं वा निर्वचनकादौचित्यमात्रादेवोपनतं वा, पूर्वत्र पक्षे निवृत्त्यङ्कुरः उत्तरत्राङ्कुर इत्युभयं न नाटचायितम् ।

तथा हि प्रयोगकुशलाः प्राहुः एवंविधे विषये घर्मी—लिखति इति, पालयन्नास्ते इति, तथा पुष्पापचयं नाटयतीति । नाटचस्य सन्धानरूपत्वं च वाक्ये सूचादीनामपि संभवत्येव । न वा नाट्येन नाटचं सन्धीयत इति नाटचायितवाचोयुक्तिरपि कथम् । तस्मादित्थमेतद् व्याख्यातव्यम्—इह यदा स्वप्नोऽप्येकघनो दृश्यते तन्मध्यत एव च किंचिद्दृश्यमान परस्य स्वप्न एव जाग्रद्रूपतामापादिते स्वप्नोऽयं मया दृष्ट इति वर्ण्यते, तदा जाग्रदपेक्षया स्वप्नव्यवहारः, न तत्र पारमार्थिक इत्यौपचारिकं तदपेक्षं तस्य स्वप्नत्वमिति तस्य स्वप्नायितव्यवहारो दृष्टः । एवमिहापि नाटच एकघनस्वभावे हि स्थिते तत्रैवासत्यनाटचानुप्रवेशान्नाटचपात्रेषु सामाजिकीभूतेषु तदपेक्षया यदन्यं नाटचं तस्य तदपेक्षया नाटचरूपत्वं पारमार्थिकमिति नाट्चायितमुच्यते । तच्च द्विविधं नाट्करूपकनिष्ठमेव वा तस्य क्रमेण लक्षणमार्याद्वितयेनोच्यते । नाट्चे यत्प्रवेशकैर्नाटचान्तरगतैरिव पात्रैः

## बालक्रीड़ा

के द्वारा कथित वाक्य के अर्थ की सूचना के अनुसार है अथवा निर्वचन के औचित्य से उपनत है पूर्व पक्ष में निवृत्यङ्कुर है उत्तर में अंकुर है । अतः ये दोनों ही नाटचायित नही है ।

जैसा कि प्रयोग कुशल लोग कहते हैं कि इस तरह विषय में कहीं घर्मी लिखता है, कहीं प्रतिपालन करता हुआ बैठा है तथा पुष्पावचय का नटन करता है । इत्यादि । इस तरह नाटच की सन्धान रूपता सूचादि के भी वाक्य में होती है । अथवा नाटच से नाटच का अनुसन्धान नहीं होता है अतः यह नाट्यायित है यह वाचोयुक्ति भी कैसे हो सकती है । इस लिए इसकी व्याख्या ऐसे करनी चाहिए यहां जब स्वप्न भी एकघन अर्थात् एक रूप में घन माने तिरन्तर दिखाई पड़ता है । जैसे—स्वप्न के बीच में ही दूसरे को कुछ दीख रहा है—कि मैंने यह स्वप्न देखा । क्योंकि यह स्वप्न ही जाग्रदवस्था को प्राप्त हो गया है तभी तो वह कहता है कि मैंने यह स्वप्न देखा । वहां जाग्रदपेक्षा से स्वप्न व्यवहार होता है यह पारमार्थिक व्यवहार नही है । यह औपचारिक है । इस लिए इसको स्वप्न कहते हैं । इसका स्वप्न की तरह व्यवहार होता हुआ देखा गया है । इस प्रकार यहां भी एक घन स्वरूप नाट्य स्थित है वहां असत्य नाट्य के अनुप्रवेश होने से सामाजिक रूप नाट्य पात्रों जो अन्य नाट्य है उसका पूर्वपिक्षा से नाट्यरूपत्व पारमार्थिक है अतः इसको नाट्यायित कहते हैं। वह नाट्यायित दो प्रकार का है एक नाटक नामक रूपक में रहता है । (दश भेद वाले रूपक का नाटक भी एक भेद है अतः नाटक नामक रूपक लिखा है') दूसरा कार्यान्तर में है । उन दोनों के लक्षणों को क्रमशः दो आर्याओं से कहते हैं ।

## अभिनवभारती

अत एव ततः प्रविशतीत्युक्तैः सङ्गमः क्रियते तन्नाटचायितम् । कीदृशैरभिनयद्वारेण यत्सूचना तयोपचारैः परमार्थतयोपचर्यमाणैः । ननूभयमपि नाटच' कस्मान्न भवति नत्वेकघनतेत्याशङ्कयाह कालप्रकर्षलक्षणाद्धेतोरन्योन्यभिन्नकालत्वात् कथं तत्रैकघनता युक्तेति भावः । यावदिति भूयस्तरं प्रबन्धं व्याप्नोति परिमितं वा तत्सर्वं नाटचायितमित्यर्थः । तथा यावदिति स्वप्ने स्वप्नान्तरं तत्राप्यन्यत् स्वप्नान्तरमित्यादिन्यायेन वा भवत्वेकघनस्वप्नायितवृत्त्या वा सर्वथा तन्नाटयायितम् । तत्रास्य बहुतरव्यापिनो बहुगर्भस्वप्नायिततुल्यस्य नाटचायितस्योदाहरणं महाकविसुबन्धुनिबद्धो वासवदत्तानाटचधाराख्यः समस्त एव प्रयोगः । तत्र हि बिन्दुसारः प्रयोज्यवस्तुक उदयनचरिते सामाजिकीकृतः, असावप्युदयनो वासवदत्ताचेष्टिते । एष चार्थः—स्वस्मिन सूत्ररूपके दृष्टे सुज्ञानो भवति । अतिवैतत्यभयात्तु न प्रदर्शितः एकस्तु प्रदेश उदाह्रियते तत्रह्यु दयने सामाजिकीकृते सूत्रधारप्रयोगः—'तव सुचरितैरेष जयति'' इति, तत उदयनः 'कुतो मम सुचरिता' नीति सास्र' विलपति—

## बालक्रीड़ा

रूपकों में जो प्रवेशकों को ततः प्रविशति—इसतरह कहे गये अभिनयान्तर प्रविष्ट पात्रों के साथ संगम किया जाता है वह नाटचायित है । कैसे पात्रों के साथ—जिनका अभिनय के द्वारा जो सूचना है उस उपचार से माने परमार्थ रूप से उपचर्यमाण है । प्रश्न—ये दोनों रूपक क्यों नहीं होते हैं । एकघनता नही होती है तो मत होवे ! ऐसी आशंका करके उत्तर देते हैं कि एक की अपेक्षा दूसरे से कालका प्रकर्ष है अधिक समय है । इस काल प्रकर्ष रूप हेतु से दोनों के काल में भेद है । तब वहां एकघनता कैसे युक्त हो सकती है ।

यावत् माने जो बहुत बड़े प्रबन्ध को व्याप्त करता है या परिमित सबन्ध को व्याप्त करता है वह सब नाट्यायित है अथवा यावत् का अर्थ है जैसे स्वप्न में स्वप्नान्तर को देखना उसमें भी अन्य स्वप्नान्तर का देखना इस न्याय से अथवा एकघन स्वप्नायित वृत्ति से प्राप्त है वह सर्वथा नाट्यायित है । उक्त दोनों प्रकार के नाट्यायित का उदाहरण महाकवि सुबन्धु के द्वारा रचित वासवदत्ता नामक गद्य प्रबन्ध के आधार पर बने हुए स्वप्नवासवदत्ता नाटक वगैरह समस्त प्रयोग हैं ।

वहां विन्दुसार प्रयोज्य वस्तु वाले उदयन के चरित से सामाजिक है । यह उदयन भी वासवत्ता के चेष्टित में सामाजिक है । यहां यह अर्थ है कि अपने को सूत्र धार के रूप में देखने पर सुज्ञान होता है । अतिवितत हो जायगा अतः सब नही लिखते हैं । तब भी उसके एक प्रदेश का उदाहरण देते हैं । जब उदयन सामाजिक है तब सूत्रधार का प्रयोग—जैसे आपके पुण्य से ही यह विजय करता है । इस पर उदयन कहते है—कहां मेरे पुण्य हैं ! ऐसा कहकर अश्रु धारा गिराते हुए विलाप करते हैं ।

**नाट्यायितमुपचारैर्यः क्रियतेऽभिनयसूचया नाट्ये ।**
**काल प्रकर्षहेतु प्रवेशकैः संगमो यावत् ।।४८।।**
**स्थाने ध्रुवास्वभिनयो यः क्रियते हर्षशोकरोषाद्यैः ।**

अभिनवभारती

एह्यम्ब किं कटकपिङ्गलपालकैस्तैर्भक्तोऽहमप्युदयनः सुतलालनीयः ।
यौगन्धरायण ममानय राजपुत्रीं हा हर्षरक्षित गतस्त्वमपप्रभावः ।।

तत्रैव बिन्दुसारः सामाजिकीभूतः परमार्थतामभिमन्यमानो "धन्या खलु (ईदृशैर्भक्तस्य) प्रलापैः" इत्युच्छ्वसति । प्रतीहारी आत्मगतं—"अअणिदपरमत्थकलणेहिं पिच्छइ खु देवो" इत्यादि ।

परिमितव्यापिनो निर्गर्भस्य नाट्यायितस्योदाहरणं यथा बालरामायणे गर्भाङ्के सीतास्वयंबरे ।

एवं तावन्नाटकरूपकनिष्ठं नाट्यायितं व्याख्यातम् ।।४८।।

कार्यान्तरनिष्ठं तूच्यते । इह यदाभ्यन्तररसाविष्टता भवति तदा ध्रुवायोगाभिनयः स्वतुल्यतामापाद्यमानः परस्परमिलिताकारकतां काकतालीयेनोपनिपातात् (संभाव्यते) । यथा—

बालक्रीड़ा

(मूल) नाट्य में रङ्ग स्थल मञ्च पर अभिनय की सूचना के द्वारा औपचारिक प्रवेशों से अर्थात् ततः प्रविशति मातलि, ततः प्रविशति सूत्रधारः ! इस तरह के उपचारकृत पात्र प्रवेशों से काल के प्रकर्ष का हेतु संगम पात्रों का होता है वह नाट्यायित है ।।४८।।

हे आद्य ! आइये । इन कटक पिङ्गलों से क्या हो सकता है सुत की तरह लालन के योग्य मैं उदयन, आपका भक्त हूँ । हे यौगन्धरायण ! राजपुत्री को मेरे समीप में लाओ । हा हर्षरक्षित तुम प्रभाव रहित होकर चले गये ।

वहाँ पर बिन्दुसार सामाजिक बनने से परमार्थता का अभिमान करता हुआ भक्त के ऐसे प्रलापों से—हम लोग धन्य हैं ! ऐसा उच्छ्वास लेता है । प्रतीहारी अअणिद इत्यादि अपने मन में कहता है । परिमितव्यापी निर्गर्भनाट्यायित का उदाहरण जैसे बालरामायण में गर्भाङ्क में सीता स्वयम्बर में है । इस प्रकार नाटक नामक रूपक में निष्ठ नाट्यायित का व्याख्यान कर दिया ।।४८।।

अब कार्यान्तर निष्ठ नाट्यायित को कहते हैं । यहां जब अन्तःकरण में रस का आवेश होता है तब काकतालीय के उपनिपात से परस्पर मिलिताकार कलस्वय स्वतुल्यता को आपाद्यमान ध्रुवागान के अभिनय की संभावना होती है ।

**भावरससंप्रयुक्तैर्ज्ञेयं नाट्यायितं तदपि ।।४९।।**

### अभिनवभारती

नलिनीदलए णीसहसुकर्देहिं आतथा मुच्चइ ।
पलइ विअब्भइ विज्जई हंसी णलिणीवणे वि णत्थिज्जइ ।।

इत्यादौ । तत्र हि प्रयोक्तुरेवमभिसन्धिध्रुवामभिनयेन दर्शयामीति । किंतु प्रासादिक्यध्रुवायां, "यत्र वाक्येन नोक्तं स्यात् तत्तु गीतं प्रसाधयेत्" (अ ३२) इति वचनात् ध्रुवार्थस्तत्रोचित आघातः, प्रयोगो हि बहुविधां मदनावस्थां नाटयतीति । एवं भूतोऽङ्कुरस्वभावः पौर्वापर्यपर्यालोचनवशात् तथाभूत एवोपनिपतित इति, अप्रयुज्यमानापि ध्रुवा काकतालीयेन प्रयोगमुपांशुरूपा नाटचमपि नाटचमिव शास्ते इति तथाविधनाटचायितत्वापादकः शारीराभिनयो नाटचायितमिति दर्शयति स्थाने ध्रुवास्वभिनयो यः क्रियत इति । भावेर्व्यभिचारिभिः रसैः स्वस्थायिभिः ये संप्रयुक्ता आविष्टाः तत्संपादनैकमनसः प्रयोक्तारस्तैर्यो ध्रुवास्विति ध्रुवार्थविषयोऽभिनयः क्रियते । कथं, स्थाने प्रसङ्गे सति काकतालीयवशादित्यर्थः । योऽभिनयः शारीरो नाटचायितम् । ननु किं प्रतिपदमभिनयता नेत्याह हर्षादिभिरिति तत्सूचकैरङ्गोपाङ्गसत्त्वैरित्यर्थः । तदपीति न केवलं पूर्वं यावदिदमपीति ।।४९।।

### बालक्रीड़ा

(मूल) रसों के अभिव्यंजक हर्ष, शोक, रोष एवं निर्वेदादि भावों के सम्यक् प्रयोग से ध्रुवाओं के समय में जो उचित अभिनय किया जाता है वह भी नाट्यायित है समझना चाहिए ।।४९।।

जैसे—नलिनीदले इत्यादि में । यहां प्रयोक्ता की यह अभिसन्धि है कि मैं ध्रुवा को अभिनय के द्वारा दिखलाऊँ । किन्तु प्रासादि की ध्रुवा के गाये जाने पर 'जो वाक्य से सिद्ध नही हो सकता है उसको गीत सिद्ध कर सकता है' इस वचन के अनुसार वहां ध्रुवा का आपात उचित ही है । प्रयोग में मदन की बहुत सी अवस्थाओं का अभिनय होता है । जिस प्रकार का अंकुर का स्वभाव है वैसा ही पूर्वापर के पर्यालोचन से उपनिपतित हो जाता है । अतः अप्रयुज्यमान भी अत एव उपांशुरूपा भी ध्रुवा काकतालीय न्याय से प्रयोग का नाट्य का भी नाट्य के सदृश शासन करती है। इस प्रकार के नाट्यायितत्व का आपादन करने वाला शारीराभिनय नाट्यायित होता है उसको दिखाते हैं—स्थाने । भावों से माने व्यभिचारियों से रसों से माने उस रस के अपने स्थायिओं से संप्रयुक्त आविष्ट हुए जो प्रयोक्ता लोग उनके सम्पादन में एक मनस्क हैं वे ध्रुवार्थ अभिनय करते हैं । कैसे करते है ? इसको बतलाते है कि स्थाने माने काकतालीय न्याय से संगम होने पर। यह शारीर अभिनय नाट्यायित है। प्रश्न—क्या प्रत्येक पद में अभिनयता है। उत्तर—नही। हर्षादि के सूचक अंग एवं उपाङ्गों में निष्ठ सत्त्व से होता है यह यहां अर्थ है । वह भी केवल पहिले हो चुका है, वही नही है अपितु 'यह भी है' यहां तक है ।।४९।।

**यत्रान्योक्तं वाक्यं सूचाभिनयेन योजयेदन्यः ।**
**तत्संबन्धार्थं कथं भवेन्निवृत्त्यङ्कुरः सोऽथ ॥५०॥**

### अभिनवभारती

यत्रान्योक्तं वाक्यं सूचाभिनयेन योजयेदन्यः ।
तत्संबन्धार्थकथं भवेन्निवृच्यङ्कुरः सोऽथ ॥

अन्योक्तं वाक्यं कथमन्यसूचाभिनये चित्तवृत्तिसूचकेनाङ्गोपाङ्गसत्त्व क्रमेण दर्शयेदित्याशङ्क्य हेतुमाह तत्संबन्धकथमिति बीजदेर्निवृत्ति यथाङ्कुरः सूचयति एवं निवृत्ते वाक्ये तदङ्कुर यति निवृत्त्यङ्कुर उक्तः । यथा हि विदूषकेण वत्स-राजे अवि सुहयदि दे लोअणाणं'' इति पृष्टे सागरिका—सच्चं जीविदमरणाणं अन्तरं वट्टामि' इति ततो राजा—सुखयतीति किमुच्यते । कृच्छ्रेणोरुयुगं व्यतीत्य सुचिरं' इत्यादि पठति । तस्मिन् क्रमेणाकर्ण्यमाने सागरिका यथाभूत (संशयोत्क-ण्ठारागोदमजनितो) व्यभिचारिसत्त्वयोजितः सत्त्वाङ्गोपाङ्गपरिस्पन्दो दृश्यमानो निवृत्त्यङ्कुरो नाट्यायितं च वासवदत्तानाट्याधारे प्रतिपदं दृश्यते । एतेषां च सर्वा-भिनयैः सम्भूय वृत्तित्वात् सर्वत्र चाभिनेये प्रायशः सद्भावात् सामान्याभिनयत्वं तदर्थमेव च वितत्यैतत्स्वरूपाभिधानम् यत्पूर्वमुक्तम्—

### बालक्रीड़ा

(मूल) जहां किसी अन्य पात्र ने एक वाक्य कहा किसी दूसरे पात्र ने उसकी सूचाभिनय से योजना कर दी । उस योजना में अर्थ का सम्बन्ध कैसे हुआ ? इसको निवृत्यंकुर कहते हैं ॥५०॥

यत्र । अन्योक्त वाक्य को अन्यसूचा के अभिनय में चित्तवृत्ति के सूचक अंगो-पाङ्गक्रम से कैसे दिखावें ऐसी आशंका करके हेतु को कहते है— तत्सम्बन्ध । जैसे अङ्कुर के उत्पन्न होने से बीज की निवृत्ति हो जाती है । क्योंकि अंकुर बीज को फोड़कर निकलता है । अन्य सूचाभिनय अङ्कुरित हो रहा है उस समय अन्योक्त वाक्य निवृत्त हो जाता है अतः इसको निवृत्यंकुर कहा । जैसे विदूषकने वत्सराज में 'अयि ! यह देखना तुमको सुख दे रहा है' ऐसा पूछा तब सागरिका कहती है—सचमुच जीवित और मरण के अन्तर में मैं हूँ । उसके वाद राजा सुख देता है—यह क्या कहते हो ? बड़े कष्ट से उस युग व्यत्यय का चिरकाल तक इत्यादि पढते हैं । उसके सुनने पर सागरिका को तथा भूत व्यभिचारियों के सम्बन्ध से जो सात्त्विक अङ्ग एवं उपाङ्गों का परिस्पन्द दिखाई पड़ रहा है वह निवृत्यङ्कुर है । यह निवृत्यङ्कुर और नाट्यायित वासवदत्त के आधार पर बने हुए नाटक में पद पद में दिखाई दे रहा है । सम्पूर्ण अभिनयों से मिलकर इनके रहने से और सर्वत्र अभिनयों में रहने से सामान्याभिनय यह है । इसी के लिए विस्तार के साथ इसके स्वरूप का कथन किया है । जो पहले कहा

**ऐतषां तु भवेन्मार्गो यथाभावरसान्वितः ।**
**काव्यवस्तुषु निर्दिष्टो द्वादशाभिनयात्मकः ।।५१।।**

**अभिनवभारती**

अस्य शाखा च नृत्तं च तथैवाङ्कुर एव च ।
त्रिविधं वस्त्वभिनयः ........................।

इति तेन सहास्य यथा न विरोधस्तथैवोपपादित्तमुपाङ्गाभिनय इति तत एवावधार्यम् । किं पुनरुक्ताभिधानेन ।।५०।।

एवमाङ्गिकं सामान्याभिनयमुपपाद्य वाचकमुपपादयति एतेषां तु भवेन्मार्ग इति विषय इत्यर्थः । वाक्यभावे यद्यप्या शरीरो निर्विषय एव तेन यदेके शाखाङ्कुर-नाट्चायितानां च वाक्यविरहितत्वं मन्यमाना एतेषामिति सर्वेषामित्यादि वाक्य-सूचानिवृत्त्यङ्कुरमात्रविषयत्वेनैव संकोचयन्ति ते न तत्त्वज्ञाः सर्वोऽप्यभिनयो वाक्योपजीवनमन्तरेण नियमहेत्वभावादसमञ्जसतामभ्येति । केवलं तत्कालिका-तत्कालिकादिमात्रेण वाक्यं भिद्यतां नाम । एतच्चोपाङ्गाभिनये वितस्योपपादितम् ।

काव्यवस्तुष्विति दशरूपकभेदेषु द्वादशरूपोऽभिनयात्मको वाचिकाभिनयस्य भाव इत्यर्थः ।।५१।।

**बालक्रीड़ा**

(मूल) इनका जो योग्यता के अनुसार रस एवं भावों से समन्वित मार्ग हो उसे काव्य में बारह प्रकार के अभिनय द्वारा कहा है ।।५१।।

था कि जिसकी शाखा नृत्य इत्यादि । इसके इसका किसी प्रकार विरोध नही होय अतः उसी प्रकार से उपाङ्ग अभिनय के प्रसङ्ग में उपपादन किया है वही से समझना चाहिए दुबारा कहने से क्या लाभ है ।।५०।।

इस प्रकार आङ्गिक सामान्याभिनय का उपपादन करके वाचिक सामान्याभिनय का उपपादन करते हैं कि इनका तो मार्ग माने विषय हो । यद्यपि वाक्यभाव में अर्थात् वाचिक अभिनय में शारीर अभिनय का विषय नही ही होता है तव भी जो कोई शाखाअङ्कुर एवं नाट्यायित को मानते हुए इन सब का इत्यादि का वाक्य सूचा और निवृत्यङ्कुर मात्र विषय के रूप से संकोच करते हैं। वे तत्वज्ञ नही हैं। क्योंकि सभी अभिनय वाक्योपजीवन के विना नियामक हेतु के अभाव में असमञ्ज में पड़ जाता है। भले ही तात्कालिक यह वाक्य है और वह वाक्य असामयिक है, इस तरह भेद हो जाय । इस सबका उपपादन हमने वाक्याभिनय में कर दिया है वही पर देखें ।

काव्य वस्तुओं में माने विभिन्न दशरूपकों में वाचिकाभिनय का बारह प्रकार का अभिनयात्मक भाव है ।।५१।।

आलापश्च प्रलापश्च विलापः स्यात्तथैव च ।
अनुलापोऽथ संलाप स्त्वपलापस्तथैव च ॥५२॥
सन्देशश्चातिदेशश्च निर्देशः स्यात्तथापरः ।
उपदेशोऽपदेशश्च व्यपदेशश्च कीर्तितः ॥५३॥
आभाषणं तु यद्वाक्यमालापो नाम स स्मृतः ।
अनर्थकं वचो यत्तु प्रलापः स तु कीर्तितः ॥५४॥

## अभिनवभारती

द्वादशप्रकारानुद्दिशति आलापश्चेत्यादिना ॥५२।५३॥

तानेव क्रमेण लक्षयति आभाषणं त्वित्यादिना। युष्मदर्थविषयमुपदेशादि-शून्यं यद्वचनं तदालाप इत्यर्थः। यथा विभ्राजसे मकरकेतनमर्चयन्ती' (रत्ना-१) यथा वा 'जयतु भवान्' इत्यादि। अनर्थकं वचो यत्तु स प्रलाप इति परस्परमसम्वद्धं मौर्ख्यादिवशादित्यर्थः। यथा दरिद्रचारुदत्ते शकारः— शुणामि मल्लगन्धं अन्ध-आलशच्चिदादो उण णासिआदो हिदुत्तं एलामि श्रृणोमि माल्यगन्धम् अन्धकार-संचितया पुनर्नासिकया तदुक्तं आलोकयामि (मृच्छ-१) ॥५४॥

## बालक्रीड़ा

(मूल) आलाप १, प्रलाप २, विलाप ३, अनुलाप ४, संलाप ५, अपलाप ६, सन्देश ७, अतिदेश ८, निर्देश ९, उपदेश १०, अपदेश ११, एवं व्यपदेश १२, ये बारह हैं ॥५२।५३॥

(मूल) जो वाक्य आभाषण स्वरूप है वह आलाप है और जो अनर्थक वाक्य है वह प्रलाप है ॥५४॥

आनापश्च इत्यादि से उन्ही बारह प्रकारों को क्रमशः कहते हैं ॥५२।५३॥

अब आभाषण इत्यादि से उन्ही आलापादिकों का क्रमशः लक्षण कहते हैं। उपदेश रहित जो सम्बोधनात्मक वचन है वह आलाप है। 'युष्मदर्थ विषयः' का अर्थ है सम्बोधनात्मक। क्योंकि संम्बोधन सारो हि युष्मदर्थः ऐसा आचार्यो का निर्देश है। जैसे मकरकेतन की पूजा करती हुई चमक रही हो। और जैसे—जयतु भवान् इति जो तो अनर्थक वचन है वह प्रलाप है। अर्थात् मूर्खता से परस्पर में असम्वद्ध बोलना है। जैसे—दरिद्रचारुदत्त में शकार का प्रलाप है। माला की गन्ध को सुनता हूँ। और अन्धकार से संचित नासिका से उसके वाक्य को देखता हूँ ॥५४॥

करुणप्रभावो यस्तु विलापः स तु कीर्तितः ।
बहुशोऽभिहितं वाक्यमनुलाप इति स्मृतः ॥५५॥
उक्तिप्रत्युक्तिसंयुक्तः संलाप इति कीर्तितः ।

## अभिनवभारती

करुणप्रभवो यस्तु स विलाप इति । करुणग्रहणं दुःखोपलक्षणम् तेन विप्रलम्भोऽपि गृह्यते । तत्र करुणरससंबन्धं वचनं (दुःखे) यथा —क्वासि प्रयच्छ मे प्रतिवचनम् विप्रलम्भे यथा—वाणाः पञ्चमनोभवस्य (रत्ना-३) इत्यादि । एतत्प्रधानादेव कामावस्थाविशेषो विलापः (तासुषष्ठचवस्था) इति वक्ष्यते । बहुशोऽभिहितं वाक्यमनुलाप इति । अनुवादार्थं तदेव पुनरुच्यमानमित्यर्थः । यथा— द्वीपादन्यस्मादपि' (रत्ना १) इति सूत्र धारेणोक्ते नेपथ्ये यौगन्धरायणः—एवमेतत् दीपादन्यस्मादपीत्यनुवदति ॥५५॥

उक्तिप्रत्युक्तिसंयुक्तः संलाप इति । यद्विधान्युदाहरणानि (?) पूर्वोक्तस्यान्यथा वादोऽप्यपलाप इति । यथा कृत्यारावणे गीतमीरूपच्छन्ना रामाक्रन्दितं लक्ष्मणे श्रावयितुकामा शूर्पणखा पूर्वमाह—'अवि सुदं ते ' अपि श्रुतं त्वया । ततः सीता

## बालक्रीड़ा

(मूल) जो वाक्य करुण प्रभव है वह विलाप है। और जो वाक्य वार २ कहा गया हो वह अनुलाप है ॥५५॥

करुणा से दीनता से जो वचन निकलता है वह विलाप है। करुण पद के उपन्यास का मतलब है दुःख। इससे विप्रलम्भ को भी लेना चाहिए। उनमें दुःख में करुण सम्वन्धी वचन जैसे—कहां हो मुझे उत्तर दो। विप्रलम्भ में जैसे—मनोभव के बाण इत्यादि। इस के प्रधान होने से ही विलाप काम की अवस्था विशेष है। उनमें षष्टी अवस्या को कहेंगे। वहुश अभिहित वाक्य अनुलाप है अर्थात् अनुवाद करने के लिए उसी को वार - वार कहना। जैसे—द्वीपादन्यस्मादपि। ऐसा सूत्रधार के कहने पर नेपथ्थ में—यौगन्धरायण ! यह ऐसा ही है। द्वीपात इसका अनुवाद करता है ॥५५॥

संलाप। इसके उदाहरण बहुत हैं। अपलाप जैसे—कृत्यारावण में गौतमी के रूप में छिपी हुई शूर्पणखा लक्ष्मण को राम का आक्रन्दन सुनाने की इच्छा से पहले कहती है कि सुना तुमने ! तब सीता घबरा कर-अरे क्या है ! उसके बाद वह शूर्पणखा आं वञ्चित

पूर्वोक्तस्यान्यथावादो ह्यपलाप इति स्मृतः ॥५६॥
तदिदं वचनं ब्रूहीत्येष सन्देश उच्यते ।
यत्त्वयोक्तं मयोक्तं तत्सोऽतिदेश इति स्मृतः ॥५७॥

अभिनवभारती

(ससंभ्रमम्) अये किंति' (अये किमिति)। ततः सा— अं वञ्चिते सत्यं गौतमीमेव मामियं सीता जानात्वित्येवं ह्याह णं मए णक्क हृण्णिदं अवि सुदं ते' इति ॥५६॥

तदिदं वचनं ब्रूहीत्येष सन्देश इति। उदाहरणेन लक्षणमुन्नेयम्। ततः परमुखेनान्यस्मै स्ववचोऽर्पणं सन्देश इति। अतिदेशस्त्वयोक्तं युक्तं मयोक्तमिति सिद्धेनासिद्धस्य तुल्यतापादनमतिदेश इत्यर्थः। अत्रोपदेशातिदेशयोरूपमानस्य च साहित्यविषये तार्किकमोमांसकविषये विशेषप्रतिपादनं यत् टीकाकारैः कृतं यत्सुकुमारमनोमोहनं वृथा भ्रमणिकामात्रं प्रकृतानुपयोगादिहोपेक्ष्यमेव ॥५७॥

बालक्रीड़ा

(मूल) जो उक्ति एवं प्रत्युक्ति से संयुक्त है वह संलाप है। पहले जो वाक्य कहा उसका उलटा बोलना अन्यथा कथन अपलाप है ॥५६॥

(मूल) जाओ और ऐसा कहो वह सन्देश है। और जो तुमने कहा उसे मैंने कहा या जैसा तुमने कहा वैसा मैंने कहा वह अतिदेश है ॥५७॥

हो गई। सीता सचमुच ही मुझे गौतमी समझती है। फिर कहती है—मैंने जो कहा उसे तुमने सुना ॥५६॥

सन्देशः। उदाहरण के द्वारा सन्देश के लक्षण का उन्नमन करना चाहिए। अतः परमुख से दूसरे को अपना वचन का अर्पण करना सन्देश है। जो तुमने कहा नही मेंने कहा युक्त है। इस तरह सिद्धपदार्थ के साथ असिद्ध पदार्थ की तुल्यता का आपादन करना अतिदेश है। यह इसका अर्थ है। यहां टीकाकारों ने जो अतिदेश उपदेश एवं उपमान को साहित्यिकों की अपेक्षा से तार्किक एवं मीमांसकों के मत में विशेषता का प्रतिपादन किया है वह सुकुमारमति बालकों को मोहने के लिए वृथा भ्रम को पैदा करना है अतः प्रकृत के अनुपयोगी होने से उपेक्षणीय है ॥५७॥

स' एषोऽहं ब्रवीमीति निर्देश इति कीर्तितः ।
व्याजान्तरेण कथनं व्यपदेश इहोच्यते ।।५८।।
इदं कुरु गृहाणेति ह्युपदेशः प्रकीर्तितः ।
अन्यार्थकथनं यत् स्यात् सोऽपदेशः प्रकीर्तितः ।।५६।।

## अभिनवभारती

स एवैषोऽहं ब्रवीमीति निर्देश इति लक्षणम् । व्याजान्तरेण कथनं व्यपदेश इति व्याजविशेषेणेत्यर्थः । यथा मुद्राराक्षसे क्षपणकस्य राक्षसदूषणार्थं तावन्नगरान्निर्वासनं तत्र च चाणक्येन व्याजेन वचनं कृतम्—'अयं पापीयान् जीवसिद्धिः राक्षसप्रयुक्तविषकन्यया पर्वतेश्वरं घातितवान् ततो निर्वास्यते' इति ।।५८।।

इदं कुरु गृहाणेति ह्युपदेश इति नियोग इत्यर्थः । अन्यार्थकथनमपदेश इति स्वयं विवक्षितस्यान्य एव वक्तीत्यन्यकथनमित्यर्थः । यथा भीमं प्रति सहदेवः—एवं गुरुणा सन्दिष्टं सुयोधनस्येति (वेणी-१) ।।५६।।

## बालक्रीड़ा

(मूल) वह यह मैं बोल रहा हूं इसको निर्देश कहते हैं । किसी बहाने से जो कथन है वह व्यपदेश है ।।५८।।

(मूल) यह करो ऐसा करो इसे ग्रहण करो इसको लो यह उपदेश कहाता है । जो अन्यार्थ कथन है वह अपदेश है ।।५६।।

निर्देश है यह लक्षण है । व्याजान्तर से अर्थात् व्याज विशेष से । जैसे मुद्राराक्षस में राक्षस को दूषित करने के लिए क्षपणक का नगर से निर्वासन किया उस विषय में चाणक्य ने छल करके कहा कि—यह जीवसिद्धि क्षपणक अतिशय पापी है इसने विषकन्या के द्वारा पर्वतेश्वर को मरवा डाला इस लिए इसको नगर से निर्वासित करते हैं ।।५८।।

उपदेश का अर्थ है नियोग । अपदेश माने स्वयं जिसको कहना चाहता है उसके विषय में अन्य कहता है ऐसे अन्य को कहना । जैसे भीम के प्रति सहदेव कहते हैं कि गुरुजी ने इस प्रकार सुयोधन को सन्देश दिया है ।।५६।।

एते मार्गास्तु विज्ञेयाः सर्वाभिनययोजकाः ।
सप्त प्रकारमेतेषां पुनर्वक्ष्यामि लक्षणम् ॥६०॥
प्रत्यक्षश्च परोक्षश्च तथा कालकृतास्त्रयः ।
आत्मस्थश्च परस्थश्च प्रकाराः सप्त एव तु ॥६१॥
एष ब्रवीमि नाहं भो वदामीति च यद्वचः ।
प्रत्यक्षश्च परोक्षश्च वर्तमानश्च तद्भवेत् ॥६२॥
अहं करोमि गच्छामि वदामि वचनं तव ।
आत्मस्थो वर्तमानश्च प्रत्यक्षश्चैव स स्मृतः ॥६३॥

### अभिनवभारती

उपसंहरति एते मार्गास्त्विति सर्वेषु षट्स्वपि शारीरेष्वित्यर्थः । तथा अभिनीयन्त इत्यभिनया नाटकादिकाव्यविशेषाः तेषु, यतः सामान्येन भवन्त्यत एवैते सामान्याभिनया इति तात्पर्यम् ॥६०॥

अथात्रैव भेदान्तराण्याह आत्मस्थश्च परस्थश्चेत्यादि । अत्रोदाहरणदिशमाह एष ब्रवीमि इति, अहं करोमीत्यादि ॥६२।६६॥

### बालक्रीड़ा

(मूल) सभी प्रकार के अभिनयों के प्रयोजक को उन मार्गों को जानना चाहिए। अब मैं इनके सात प्रकार के लक्षणों को कहूंगा ॥६०॥

(मूल) प्रत्यक्ष, परोक्ष तथा तीन कालकृत और आत्मस्थ एवं परस्थ ये सात प्रकार हैं ॥६१॥

(मूल) यह मैं बोलता हूं। भोः मैं नही बोलता हूं इत्यादि जो वर्त्तमान कालिक वचन है वह प्रत्यक्ष है और जो वैसा नही है वह परोक्ष है ॥६२॥

(मूल) मैं करता हूं, मैं जाता हूं मैं तुमको कहता हूं ऐसा जो आत्मस्थ माने अपने में जो वर्तमान कालिक वचन है वह प्रत्यक्ष है ॥६३॥

उपसंहार करता है ये मार्ग है। सभी में यानी छहों शारीर अभिनयों में। अभिनीत किये जाते हैं वे नाटकादि काव्यविशेष अभिनय हैं उनमें। क्योंकि ये सामान्यरूप से होते हैं अत एव ये सामान्याभिनय हैं। यह तात्पर्य यहां है ॥६०॥

इसी के भेदान्तरों को कहते हैं आत्मस्थ और परस्थ इत्यादि। अब इनके उदाहरणों को उद्देश क्रम से कहते हैं। एष ब्रवीमि अहं करोमि। इत्यादि ॥६१।६६॥

करिष्यामि गमिष्यामि वदिष्यामीति यद्वचः ।
आत्मस्थश्च परोक्षश्च भविष्यत्काल एव च ॥६४॥
हता जिताश्च भग्नाश्च मया सर्वे द्विषद्गणा ।
आत्मस्थश्च परोक्षश्च वृत्तकालस्य स स्मृतः ॥६५॥
त्वया हता जिताश्चेति यो वदेन्नाटचकर्मणि ।
परोक्षश्च परस्थश्च वृत्तकालस्तथैव च ॥६६॥
एष ब्रवीति कुरुते गच्छतीत्यादि यद्वचः ।
परस्थो वर्तमानश्च प्रत्यक्षश्च भवेत्तथा ॥६७॥
स गच्छति करोतीति वचनं यदुताहृतम् ।
परस्थं वर्तमानं च परोक्षं चैव तद्भवेत् ॥६८॥
करिष्यन्ति गमिष्यन्ति वदिष्यन्तीति यद्वचः ।
परस्थमेष्यत्कालं च परोक्षं चैव तद्भवेत् ॥६९॥
हस्तमन्तरतः कृत्वा यद्वदेन्नाटचकर्मणि ।

अभिनवभारती

इदानीं विषयभेदकृतमात्मस्थस्यापि पारोक्ष्यं दर्शयति हस्तमन्तरतः कृत्वेत्यादि

बालक्रीड़ा

(मूल) मैं करूंगा, जाऊंगा कहूंगा यह जो आत्मस्थ माने अपने में भविष्यत्कालीन वचन है वह परोक्ष है ॥६४॥

(मूल) मैंने सब शत्रुओं का हनन एवं भञ्जन कर दिया अतः उनको जीत लिया ऐसा जो अपने में भूतकालीन वृत्तकालिक वचन है वह परोक्ष है ॥६५॥

(मूल) जो नाटच कर्म अर्थात् प्रयोग के समय में तुमने मार दिया, तुमने जीत लिया ऐसा जो दूसरे में भूतकालीन वचन है वह परोक्ष है ॥६६॥

(मूल) यह बोलता है, करता है और जाता है इत्यादि जो परस्थ वर्तमान कालिक वचन है वह प्रत्यक्ष है ॥६७॥

(मूल) वह जाता है या करता है ऐसा जो किसी ने कहा वह परस्थ वर्तमान कालिक वचन परोक्ष है । ॥६८॥

(मूल) करेंगे, जायेंगे कहेंगे यह जो वचन है ऐसा जो दूसरे में माने परस्थ भविष्यत् कालिक वचन है वह परोक्ष है ॥६९॥

इस समय विषय भेद के कारण होने वाले आत्मस्थ को भी परोक्ष कहते हैं ।

**आत्मस्थं हृदयस्थं च परोक्षं चैव तन्मतम् ॥७०॥**
**परेषामात्मनश्चैव कालस्य च विशेषणात् ।**
**सप्तप्रकारस्चास्यैव भेदा ज्ञेया अनेकधा ॥७१॥**
**एते प्रयोगा विज्ञेया मार्गाभिनययोजिताः ।**

## अभिनवभारती

स्वगतजनान्तिकापवारितकेषु वक्तुरात्मस्थं पात्रान्तराणां चाप्रत्यक्षं नाटचधर्मीवशादित्यात्मस्थमपि तत्परोक्षम् । लोकधर्म्यप्यात्मस्थं परोक्षम् । यथा—'सुप्तो मत्तो न्वहं किल विललाप' इति । यदाहोत्तमविषयेऽपि चित्तव्याक्षेपादिभ्यो 'लिट् भवतीति' ॥७०॥

अन्यभेदानां कार्येण सम्भवमाह—

परेषामात्मनश्चैव कालस्य च विशेषणात् ।
सप्तप्रकारस्यास्यैव भेदा ज्ञेया अनेकधा ॥
एते प्रयोगा विज्ञेया मार्गाभिनययोजिताः ।
एतेष्विह विनिष्पन्नो विविधोऽभिनयो भवेत् ॥

इह तावद्वाक्यं द्वादशधाभिन्नं तत्राप्यात्मस्थपरस्थयोः प्रत्यक्षत्वपरोक्षत्वाभ्यां चतुर्विधत्वं चतुर्णां कालत्रयेण गुणने द्वादशभेदाः । भूतभविष्यतोरपि प्रत्यक्षत्वं

## बालक्रीड़ा

(मूल) अभिनय के समय में जो अभिनेता पात्र अपने और दूसरे पात्र के बीच में हाथ का व्यवधान (ओट करके) बोलता है तो वह वचन अपने में हृदयगत वाक्य परोक्ष कहलाता है ॥७०॥

(मूल) दूसरे के और स्वयं के, समय के कारण सात प्रकार वाले, इसके अनेक प्रकार के भेद होते हैं ॥७१॥

स्वगत जनान्तिक एवं अपवारितक में जो वस्तु है वह वक्ता के लिए आत्मस्थ है और पात्रान्तर के लिए परोक्ष है। इस तरह नाटच धर्मी के वश से आत्मस्थ भी परोक्ष होता है लोकधर्मी आत्मस्थ भी परोक्ष ही है। जैसे मैं सोता हुआ-एवं पागल हुआ विलाप करता था । इत्यादि । जैसा कि कहा है कि चित्त के विक्षिप्त होने पर उत्तम पुरुष में भी लिट् लकार होता है ॥७०॥

यहां वाक्य के बारह भेद कहते हैं। उसमें भी आत्मस्थ और परस्थ का प्रत्यक्षत्व एवं परोक्षत्व भेद से चार प्रकार है। उन चारों का भी तीन कालों से गुणा करने पर १२ भेद होते हैं। भूत और भविष्य का भी योगी की प्रत्यक्ष दृष्टि से

एतेष्विह विनिष्पन्नो विविधोऽभिनयो भवेत् ॥७२॥
शिरो हस्तकटीवक्षोजङ्घोरुकरणेषु तु ।
समः कर्मविभागो यः सामान्याभिनयस्तु सः ॥७३॥
ललितैर्हस्तसंचारै स्तथा मृद्वङ्गचेष्टितैः ।
अभिनेयस्तु नाटयज्ञै रसभावसमन्वितैः ॥७४॥

अभिनवभारती

योगिप्रत्यक्षादिदृशा भवति । एवं द्वादशानां तावद्भिर्गुणने २४ भेदाः संस्कृतेतरभेदेन चतुर्विधत्वं यदुक्तं तेन गुणने वाक्याभिनयस्य ९६ भेदाः । सूचाया वाक्यतदर्थभेदाद् द्वैगुण्यम् । तेन एकोनविंशतिशतानि चतुरधिकानि १९२ सूचाभेदाः । वाक्यतुल्या एवाङ्कुरभेदाः । सूचाभेदैर्गुणनीयास्ते, पुनः शाखाभेदास्तैरपि द्विविधनाटचायित-भेदास्तावद्भिर्निवृत्त्यङ्कुरभेदा इति कोटिशतान्यनेकानि भवन्ति । न तु यथा श्रीशङ्कुकेनोक्तं चत्वारिंशत्सहस्राणीत्यादि ॥७ ।७२।

एवं विशिष्टः यः सामान्येनाभिनीयमानः संभूयाभिनयैर्युक्तः सर्वाभिनयेषु सामान्यभूत इत्येवं स सामान्याभिनयः ॥७३।७४॥

बालक्रीड़ा

(मूल) मार्गाभिनय की योजना से किये गये इन प्रयोगों को जानना चाहिए इन्हीं में ही विविध अभिनय निष्पन्न होता है ॥७२॥

(मूल) वह सामान्य अभिनय होता है जो क्रमशः शिर, हस्त, कटी, वक्ष जङ्घा ऊरु और कर्णो आदि में समान रूप से विभक्त होता है ॥७३॥

(मूल) रस एवं भाव में विभोर नाट्य के जानकार अभिनेता लोगों को मृदवंग चेष्टा अर्थात् कोमल अंगो से की गई चेष्टाओं और सुन्दर तरीके से किये गये हस्त संचार से अभिनय करना चाहिए ॥७४॥

प्रत्यक्षत्व ही है। इस प्रकार बारह से दो का गुणा करने से २४ भेद होते हैं। इसके बाद संस्कृत एवं संस्कृतेर प्राकृत तथा उनके गद्यात्मक और पद्यात्मक भेद से जो चार प्रकार बतलाये थे उनसे २४ का गुणा करने पर वाक्याभिनय के ९६ भेद होते हैं। उसके बाद सूचा के वाक्य एवं वाक्यार्थ रूप से दो भेद होते हैं उनसे गुणा करने पर सूचा के १९२ भेद होते हैं। वाक्य भेद के समान अङ्कुर के भेद होते हैं। उनको सूचा के भेदों से गुणित करो फिर शाखा भेदों को उनसे गुणित करो। फिर द्विविध नाटचायित भेदों को उतने ही प्रकार के अंकुर भेदों से गुणा करो तब अनेक भेद हो जायेंगे। किन्तु जैसा कि श्रीशंकुक ने ४० हजार भेद कहे हैं वे ठीक नही हैं ॥७१।७२॥

ऐसा विलक्षण जो सामान्य तौर से अभिनीयमान है वह अन्य अभिनयों से मिलकर सभी अभिनयों से जुड गया है इस तरह सामान्य हुआ सामान्याभिनय है ॥७३।७४।

अनुद्धतमसंभ्रान्तमनाविद्धाङ्गचेष्टितम् ।
लयतालकलापात प्रमाणनियतात्मकम् ॥७५॥
सुविभक्तपदालापमनिष्ठुरमकाहलम् ।
यदीदृशं भवेन्नाट्यं ज्ञेयमाभ्यन्तरं तु तत् ॥७६॥
एतदेव विपर्यस्तं स्वच्छन्दगतिचेष्टितम् ।
अनिबद्धगीतवाद्यं नाट्यं बाह्यमिति स्मृतम् ॥७७॥

अभिनवभारती

अस्या एकीभावनिबन्धनभूताया अलातचक्रसंनिभत्वसम्पादिकाया सामान्याभिनयक्रियायाः प्राधान्यप्रदर्शनार्थमाह अनुद्धतमसंभ्रान्तमित्यादि ॥७५।७६॥

अनाविद्धशब्देनाङ्गिकविषयं सामान्यं दर्शयति। एतदभावं दुष्टत्वमिति दर्शयन् व्यतिरेकक्रमेणापि सामान्याभिनयस्यावश्योपादेयतामाह एतदेव विपर्यस्तमित्यादिना ॥७७॥

बालक्रीड़ा

(मूल) अनुद्धत माने औद्धत्य स्वतन्त्रता से रहित हो संभ्रम घबराहट जहां नही हो अंगों की चेष्टायें आविद्ध विशृंखलित नही हो लय ताल कला एवं पात माने संगीत की ध्वनियों के प्रमाण अपने रूप में नियत हो पदों का गाये जाने लायक पदों का और ध्रुवाओं का आलाप विभक्त हो मिश्रित नही हो निष्ठुरता से रहित हो और जहां काहल माने कोलाहल नही हो यानी जन सम्मर्द के कारण गड़बड़ी जहां नही हो ऐसा नाट्य यदि होता वहनाट्य आन्तरिक नाट्य है ॥७५।७६॥

(मूल) यही पूर्वोक्त विशेषणों से युक्त नाट्य विपर्यस्त हो यानी उपर्युक्त विशेषणों से शून्य हो स्वतन्त्र आचरण पात्रों के होते हो पात्रों की चाल ढाल चेष्टाये स्वच्छन्द हो नियन्त्रित नही हो गीत वाद्य लयताल आदि अपने नियम में बंधे हुए नही हो ऐसा नाट्य बाह्य माना है ॥७७॥

एकीभाव का निबन्धन माने कारण बनने वाली तथा अलातचक्र प्रतिमता की सम्पादिका सामान्य अभिनय क्रिया की प्रधानता दिखलाने के लिए कहते हैं कि अनुद्घत । सुविभक्त ॥७५।७६॥

अनाविद्ध शब्द से आङ्गिक सामान्याभिनय को दिखाते हैं। इसके अभाव में दोष है इसको दिखाते हुए व्यतिरेक के क्रम से भी सामान्याभिनय की उपादेयता को कहते हैं एतदेव ॥७७॥

लक्षणाभ्यन्तरत्वाद्धि तदाभ्यन्तरमिष्यते ।
शास्त्रबाह्यं भवेद्यत्तु तद्बाह्यमिति भण्यते ॥७८॥
अनेन लक्ष्यते यस्मात् प्रयोगः कर्म चैव हि ।
तस्माल्लक्षणमेतद्धि नाट्येऽस्मिन् संप्रयोजितम् ॥७९॥

## अभिनवभारती

आभ्यन्तरमिति स्वयमेव विवृणोति लक्षणाभ्यन्तरत्वादिति ॥७८॥

ननु वागङ्गाभिनयोपेत इति लक्षणं तस्य बाह्योऽप्यस्तीत्याशङ्क्याह अनेन लक्ष्यते यस्मादिति सामान्याभिनयरूपमेव लक्षणमिति तात्पर्यम् । संप्रयोजितमिति नाट्यविषयाः प्रत्येकं तावत् क्रिया एकीभावं नेयाः, एकीभावगतश्च क्रियासमूहोऽप्येकीभावं नेय इत्येतत् । कर्मप्रयोगशब्दाभ्यां नाट्य इति सप्तम्या कथयति—अनेन विना स्फुटं नाट्यरूपत्वमेव साक्षात्काराध्यवसायरूपं रसानुप्राणितं तन्न संपद्यत इति ॥७९॥

## बालक्रीड़ा

(मूल) नाट्यचार्यों के द्वारा बतलाये लक्षणों से युक्त एवं आभ्यन्तर लक्षणों से सम्पन्न होने से वह नाट्य आभ्यन्तर माना जाता है और आचार्यों के शासन से बाह्य नाट्य बाह्य कहलाता है ॥७८॥

(मूल) क्योंकि पहले बतलाये हुए इन लक्षणों से प्रयोग अभिनय एवं कर्म पात्रों की चेष्टायें क्रियायें लक्षित होती हैं इसी लिए इस नाट्य में इन लक्षणों वाले अभिनय का सम्यक् प्रयोग होता है या किया जाता है ॥७९॥

लक्षणाभ्यन्तरत्व इत्यादि से आभ्यान्तर का स्वयं विवरण करते हैं । ॥७८॥

प्रश्न—आपने आभ्यन्तर लक्षण कहा ठीक है किन्तु वागङ्गाभिनयोपेत इत्यादि वाह्य भी तो उसका लक्षण है ऐसी आशंका करके कहते हैं अनेन । सामान्याभिनय रूप ही लक्षण है ऐसा तात्पर्य है। संप्रयोजितम् का अर्थ है कि नाट्य सम्बन्धी जितनी भी क्रियायें हैं उन सबका एकीभाव करना चाहिए एकीभाव में किये गये क्रिया समूह का भी एकीभाव करना चाहिए । कर्म एवं प्रयोग शब्दों से और 'नाट्ये' इस सप्तमी विभक्ति से कहते हैं कि इस एकीभाव के विना रस से अनुप्राणितता साक्षात्कार अध्यवसायात्मक नाट्य स्वरूप स्फुट माने संपन्न नही होता है ॥७९॥

अनाचार्योषिता ये च ये च शास्त्रबहिष्कृताः ।
बाह्यं प्रयुञ्जते ते तु अज्ञातवाचार्यकीं क्रियाम् ।।८०।।
शब्दं स्पर्शं च रूपं च रसं गन्धं तथैव च ।
इन्द्रियाणीन्द्रियार्थांश्च भावैरभिनयेद् बुधः ।।८१।।
कृत्वा साचीकृतां दृष्टिं शिरः पार्श्वनतं तथा ।

अभिनवभारती

व्युत्पत्तिदूरीभावं त्वनत्रीयानां, भट्टपुत्रादौ तदभावात्तदाह अनाचार्योषिता ये चेत्यादिना ।।८०।।

अथ संभूयाभिनयरूपत्वमेव सामान्याभिनयमाह शब्दं स्पर्शं चेत्यादि । इन्द्रियस्येन्द्रियार्थस्पर्शादिविशेषेणस्यात् सम्भूयमानत्वम् । स्वविषयग्राहकतावेशः स्वकरणग्राह्यतावेशश्च सर्वेषामिन्द्रियाणाँ विषयाणां च प्रदर्श्यंते, अत एवैष सामान्याभिनयनेयेऽर्थद्वयेऽभिनयस्य साधारण्यम् । भावैरिति क्रियाविशेषैरित्यर्थः ।।८१।।

तानाह कृत्वा साचीकृतां दृष्टिमित्यादि । अनेनादरवशात्समस्तो भरः श्रोत्रदेशमनुयाति, यथोक्तं—

बालक्रीडा

(मूल) जिन्हों ने आचार्य के यहां उसकी सेवा में निवास नही किया जो शासन से बहिष्कृत हैं वे आचार्यो की क्रिया विना जाने प्रयोग करते है अतः वह बाह्य प्रयोग है ।।८०।।

(मूल) रूप रस गन्ध स्पर्श एवं शब्द इन इन्द्रियों के अर्थ विषयों एवं इन्द्रियों के अभिनय को बुध भाव के साथ करें ।।८१।।

जो तो अध्ययन नही करते हैं उनको स्फुट होना क्या उनसे तो व्युत्पत्ति ही दूर हो जाती है । उसका अभाव भट्टपुत्र वगैरह में है । इसको कहते हैं कि जिन्होंने आचार्य की सेवा में निवास नहीं किया है ।।८०।।

अथ सामान्याभिनय संभूयाभिनय रूप ही है इसको कहते हैं शब्द । इन्द्रियों की इन्द्रियों के विषय शब्दस्पर्शादि विशेष अर्थो के साथ सम्भूयमात्व हो सकता है । क्योंकि इन्द्रियों में ग्राहकता और विषयों में ग्राह्यता दिखाई पड़ती है । इन्द्रियों की अपने विषय में ग्राहकता है और विषयों की अपने करणों इन्द्रियों के लिए ग्राह्यता है । इसी लिए सामान्य एवं अभिनेय इन दो अर्थो में अभिनय की सावारणता है । भाव के माने क्रिया विशेष है ।।८१।।

उन भावों को कहते हैं—दृष्टि का साचीकरण कर के ।

तर्जनीं कर्णदेशे च बुधः शब्दं विनिर्दिशेत् ॥८२॥
किंचिदाकुञ्चिते नेत्रे कृत्वा भ्रूक्षेपमेव च ।
तथाऽसगण्डयोः स्पर्शात् स्पर्शमेवं विनिर्दिशेत् ॥८३॥
कृत्वा पताकौ मूर्धस्थौ किंचित्प्रचलिताननः ।
निर्वर्णयन्त्या दृष्टया च रूपं त्वभिनयेद् बुधः ॥८४॥
किंचिदाकुञ्चिते नेत्रे कृत्वोत्फुल्लां च नासिकाम् ।
एकोच्छ्वासेन चेष्टौ तु रसगन्धौ विनिर्दिशेत् ॥८५॥

अभिनवभारती

तथाहि शेषेन्द्रियवृत्तिरासां ।
सर्वात्मना चक्षुरिव प्रविष्ठा ॥ (रघु ७-१२) इति

चकाराच्छ्रोत्रमपि शब्दग्रहणाविष्टमनेनाभिनीतं भवतीत्याह । एव मुत्तरत्र ॥८२।८५॥

बालक्रीड़ा

(मूल) अभिनय की मर्यादा के जानकार लोग दृष्टि को तिरछी करके शिर को वायें या दायें तरफ झुका कर और कर्ण पर तर्जनी को रखकर शब्दों का निर्देश करें ॥८२॥

(मूल) स्पर्श का अभिनय करते समय नेत्रों को किञ्चित् आकुञ्चित भ्रुकुटियों का विक्षेपण और कपोलों का स्पर्श करना चाहिए ॥८३॥

(मूल) पताका मस्तक पर रखकर मुख का किञ्चित् संचालन करते हुए किसी वस्तु को बड़े गौर से निहार रही है ऐसी दृष्टि से रूप का अभिनय करे ॥८४॥

(मूल) नेत्रों को किञ्चित् आकुञ्चित करके एवं नासिका को फुला कर एक ही श्वांस में माने एक ही क्रिया में अपने अभीष्ट रस एवं गन्ध का अभिनय करना चाहिए ॥८५॥

इस साचीकरण के जरिये अनादर से समस्त भार कर्णदेश पर आ गया है । जैसा कि कालिदास ने रघुवंश में कहा है—ऐसा मालूम पड़ता है अज को देखने के समय में इन नायिकाओं की सभी इन्द्रियों की वृत्ति चक्षु में ही घुस गई है । यहां 'कर्णदेशे च' में जो च शब्द है उससे यह अभिनीत होता है कि कर्ण का भी शब्द के ग्रहण करने में आवेश है । इसी प्रकार आगे भी समझें ॥८२।८५॥

पञ्चानामिन्द्रियार्थानां भावा ह्येतेऽनुभाविनः ।
श्रोत्रत्वङ्नेत्रजिह्वानां घ्राणस्य च तथैव हि ॥८६॥
इन्द्रियार्थाः समनसो भवन्ति ह्यनुभाविनः ।
न वेत्ति ह्यमनाः किंचिद्विषयं पञ्चधागतम् ॥८७॥
मनसस्त्रिविधो भावो विज्ञेयोऽभिनये बुधैः ।

अभिनवभारती

एतदुपसंहरति पञ्चानामिन्द्रियार्थानामित्यादि ॥८६॥

इन्द्रियार्थाः समनस इति यथाशब्दादिग्रहणक्रियाभिः शब्दः श्रोत्रे प्रतीयते, तन्मनोऽपि तदधिष्ठातृक्रमेणाधिष्ठानं कुर्वदित्यतोऽपि सामान्याभिनयः । तदुक्तम्—युगपद्ज्ञानद्वयानुत्पत्तिर्मनसो लिङ्गमिति ॥८७॥

मनसस्त्रिविधो भाव इति वैशेषिकादिदृशि मनस्संयोगजो य आत्मन इच्छा द्वेषमाध्यस्थ्यलक्षणो भावः स मनस इत्युक्तः । कापिलदृशि तु विन्ध्यवासिनो मनस

बालक्रीड़ा

(मूल) श्रोत्र त्वक् नेत्र जिह्वा एवं घ्राण इन पाञ्चों इन्द्रियों के तथा पांचों इन्द्रियों के विषयों के अनुभावी ये उपरिनिर्दिष्ट भाव हैं ॥८६॥

(मूल) समनस्क पुरुष ही इन्द्रियों के पांचो विषयों का अनुभव कर सकता है इससे सिद्ध है कि मन रहित अमनस्क पुरुष पांच प्रकार के विषयों का अनुभव नही कर सकता ॥८७॥

इस पांचों इन्द्रियों का उपसंहार करते हैं ॥८६॥

इन्द्रियों के अर्थ । जैसे शब्द ग्रहण क्रियाओं से शब्द कर्णदेश पर जाता है वैसे मन भी इन्द्रियों के अधिष्ठाता के क्रम से अधिष्ठान करता है । क्योंकि कहा है—मनो हि हेतुः सर्वेषामिन्द्रियाणां प्रवर्त्तने । इसलिए भी यह सामान्याभिनय है । आचार्य ने तदुक्त से कहा है एक साथ दो ज्ञानों का नही होना मन का चिह्न है लिङ्ग है । मन का किसी एक ही इन्द्रिय के साथ सम्बन्ध होता है अतः युगपत् ज्ञानद्वय की उत्पत्ति नही होती है ॥८७॥

मन का तीन प्रकार का भाव है । वैशेषिको की दृष्टि में मन के संयोग से जो आत्मा का इच्छा द्वेष एवं आध्यस्थ्य रूप भाव है वह मन का है । कपिल की

इष्टस्तथा ह्यनिष्टश्च मध्यस्थश्च तथैव हि ॥८८॥
प्रह्लादनेन गात्रस्य तथा पुलकितेन च ।
वदनस्य विकासेन कुर्यादिष्टनिदर्शनम् ॥८९॥
इष्टे शब्दे तथा रूपे स्पर्शे गन्धे तथा रसे ।
इन्द्रियैर्मनसा प्राप्तैः सौमुख्यं संप्रदर्शयेत् ॥९०॥

## अभिनवभारती

एव, ईश्वरकृष्णादिमते मनःशब्देनात्र बुद्धिः ॥८८॥

प्रह्लादनेन गात्रस्येत्यादिकं विषयग्रहणक्रियास्यभीष्टविषये निदर्शयितव्यम् । अतोऽपि चास्य सामान्याभिनयत्वं द्रष्टव्यम् ॥८९॥

एतदेव स्फुटयति इष्टे शब्द इत्यादिना । सुमुखत्वं प्रसादादियुक्तं वदनमित्यर्थः ॥९०॥

## बालक्रीड़ा

(मूल) इष्ट अनिष्ट तथा मध्यस्थ इस प्रकार से मन का त्रिविध भाव होता है ऐसा अभिनय के विषय में विद्वानों को समझना चाहिए ॥८८॥

(मूल) इनमें इष्ट भाव का अभिनय गात्र शरीर के प्रह्लादन माने अनन्दमयी चेष्टा व रोमाञ्च और मुख के विकास से करना चाहिए ॥८९॥

(मूल) समनस्क इन्द्रियों से प्राप्त किये गये इष्ट रूप, रस, स्पर्श, शब्द एवं गन्ध के विषय में सौमुख्य यानी अनुकूलता दिखाये । अर्थात् इन इष्ट पदार्थों की तरफ आकृष्ट हो जाय ॥९०॥

दृष्टि विन्ध्यवासी मन से ही है ईश्वर कृष्णादि के मत में मन शब्द से यहाँ बुद्धि है ॥८८॥

गात्र के प्रह्लादन से इत्यादिक विषयों के ग्रहण में अभीष्ट के विषय में निदर्शन है । इससे भी यह सामान्याभिनय है ऐसा समझना चाहिए ॥८९॥

इष्ट शब्द में इत्यादि के द्वारा इसी को स्पष्ट करते हैं । सुमुखित्व माने प्रसन्नता से युक्त मुख है ॥९०॥

